# संस्कृत-वार्ता:

**दिनाङ्क:** - 08-12-**2020**

**प्रात:** - 06: 55

**मुख्य-वार्ता:**

- प्रधानमन्त्री नरेन्द्रमोदी अद्य दृश्यश्रव्यप्रणाल्या 'इण्डिया मोबाइल कांग्रेस' सम्मेलने उद्घाटन सत्रं सम्बोधयिष्यति।
- भारत-पिधानम् अवलम्ब्य केन्द्रसर्वकारेण सर्वे केन्द्रशासितप्रदेशाः प्रदेशाश्च अधिसूचिताः यत् सुरक्षा प्रबन्धनं सुदृढं भूयात्।
- यूकेदेशः विश्वस्य प्रथम देशत्वेन कोविड्-नवदशसूच्यौषधम् अद्य जनेभ्यः समुपलब्धं कारयिष्यति।
- कोरोनात: राष्ट्रिया स्वस्थता-मिति: अपचीय चतुर्णवति दशमलव चतु: पंच-परिमिता समंकिता।
- प्रधानमंत्री नरेंद्र मोदी ह्यः न्यगादीत् यत् प्रशासनं लघुनगराणां आत्मनिर्भर-भारतस्य केन्द्रत्वेन विनिर्माणे बलं यच्छति।
- भारतम्-ऑस्ट्रलिया देशं च अन्तरा प्रचाल्यमानाया: विंशतिप्रतिविंशति क्रीकेटक्रीडाया: अन्तिमा क्रीडा अद्य सिडनी-क्रीड़ाङ्गणे भविता।

**कोविड ओपनिंग**

कोरोणामहामार्या: विरुद्धं देश: ऐक्यभावनया युध्यति। भवन्तोऽपि अस्माभि: सह सुरक्षाया: उपायत्रयस्य संकल्पं स्वीकुर्वन्तु -

- **मुखावरंक सन्धारयन्तु**
- **सामाजिकदौर्यं परिपालयन्तु,**
- **पाणिपादं च यथासमयं प्रक्षालयन्तु।**

**पीएम-आईएमसी**

प्रधानमन्त्री नरेन्द्रमोदी अद्य दृश्यश्रव्यप्रणाल्या 'इण्डिया मोबाइल कांग्रेस' सम्मेलने उद्घाटनसम्बोधनं विधास्यति। आईएमसी विंशतिः विंशतिः इति सम्मेलनं डीटीसीओए इति द्वारा आयोज्यते।

**आयुष-योग**

मोरारी-जी-देसाई-राष्ट्रिय-योग-संस्थानम् अन्तर्जालीय-शिक्षणस्य कृते नवीनानां सम्प्रयोगाणां सिद्धान्तान् सज्जीकरोति। अभिक्षमतावृद्धिसोपानानां निर्माणावश्यकता नितरां शिक्षणे प्रविधेः वृद्धिः इति कारणात् वर्तते। अधुना एतादृशानां कक्षाणां स्थापनं करिष्यते यतः योगस्य कक्ष्याः अन्तर्जालद्वारा सम्यक् रूपेण सञ्चालिताः भविष्यन्ति।

**भारत-पिधानम्**

भारत-पिधानम् अवलम्ब्य केन्द्रसर्वकारेण सर्वे केन्द्रशासितप्रदेशाः प्रदेशाश्च अधिसूचिताः यत् सुरक्षा प्रबन्धनं सुदृढं भूयात्। येन कृषक समूहैः क्रियमाणं 'भारत-पिधानम्' इति अस्य उपरि सम्यक् निरीक्षणं भवेत्। अवधेयास्पदं वर्तते यत् कृषकाः नवीनकृषि-विधेयकस्य विरूद्धं विरोधप्रदर्शनं समाचरन्ति। तदंगत्वेन अद्य कृषकैः एकादशवादनतः त्रिवादनं यावत् भारत-पिधानम् आहूतं वर्तते। दिल्ली प्रवेशद्वाराणि पिहितानि स्थास्यन्ति।

**यूके वैक्सीन**

यूकेदेशः विश्वस्य प्रथम देशत्वेन कोविड्-नवदशसूच्यौषधम् अद्य जनेभ्यः समुपलब्धं कारयिष्यति। प्रारम्भिकस्तरे सूच्यौषधं चिकित्सालयेषु समुपलब्धं भविष्यति अनन्तरम् इदं निजी-चिकित्सालयानां कृते समुपलब्धं कारयिष्यते । फाइजर् तथाच बायोएन्टेक् द्वारा निर्मिताय सूच्यौषधाय ब्रिटेन द्वारा गतसप्ताहे एव स्वीकृतिः प्रदत्ता आसीत्।

**कृषि –विधेयकम्**

केन्द्रप्रशासनम् अभिनवं कृषि-विधेयकम् अवलम्ब्य श्वः नवदिल्यां कृषक-संघटनै: समं षष्ठ-स्तरीयां मन्त्रणां समाचरिष्यति। मन्त्रणाया: उद्देश्यं अभिनव-कृषि-विधेयके उत्पन्नस्य गतिरोधस्य निराकरणम् अस्ति। एतदवधेयं यत् शनिवासरे कृषिमन्त्रिणा सह समाचरिते पंचमस्तरीये वार्ताविधौ कृषका: आश्वासिता: आसन् यत् न्यूनतम-समर्थन-मूल्यं यथावदेव प्रवर्तयिष्यते, एतदवसानस्य नास्ति कथमपि आशंका।

**प्रधानमन्त्री आगरा**

प्रधानमंत्री नरेंद्र मोदी न्यगादीत् यत् प्रशासनं लघुनगराणां आत्मनिर्भर-भारतस्य केन्द्रत्वेन विनिर्माणे बलं यच्छति।आगराया: मैट्रोपरियोजना अस्यैव  संकल्पस्य एकं उदाहरणमस्ति। प्रधानमंत्री ह्यः आगरानगरे मैट्रोपरियोजनाया: निर्माणकार्यस्य शुभारम्भं व्यदधात्। अत्रावसरे केंद्रीय आवासनागरमन्त्री हरदीप सिंह पुरी, उत्तर प्रदेशस्य मुख्यमंत्री योगी आदित्यनाथ: उपस्थितौ आस्ताम्।अत्र कार्यक्रमे अन्तर्जालमाध्यमेन सहभागितां कुर्वन् प्रधानमंत्री प्रावोचत् यत् प्रत्येकमपि देशवासी कोरोना-महामार्या: रोघकं सूच्यौषधं प्रतीक्षते। नास्त्येषा प्रतीक्षा इदानीं दीर्घकालिकी।अमुना विषाणु सम्बद्धानां दिशानिर्देशानाम् काठोर्येण अनुपालनाय जना: परामृष्टा:।

**दिल्ली-सैनिक:**

दिल्ली-सेनाया: विशिष्टदलेन अद्य शकरपुस्क्षेत्रात् पञ्च सन्दिग्ध-आतङ्कवादिनो निगडिता:। निगडनमिदं आतंकवादिभिस्सह संजात-संघर्षावधौ प्रवर्तिततम्। निगडितेषु आतङ्कवादिषु  द्वौ पंजाबत: त्रयश्च कश्मीरक्षेत्रात् वर्तन्ते।

**कोरोना**

भारतेन कोरोना-विरूद्धे युद्धे पुनरपि एक: महत्वपूर्ण: कोषीयप्रस्तर खण्ड: पारित:, यदा अद्य चुतुर्लक्षतोपिऽ अधोगता विषाणो: संक्रमितानां सक्रिया संख्या। साम्प्रतं षण्णवति-सहस्रोत्तर-त्रि-लक्ष-संख्याका: जना: सन्ति संक्रमणग्रस्ता:। राष्ट्रिया स्वस्थता-मितिश्चापि अपचीय चतुर्णवति दशमलव चतु: पंच-परिमिता समंमिता। देशे चिकित्सोपचारानन्तरं स्वस्थतां गतानां प्रतिशतता सक्रिय-प्रकरणानाम् अपेक्षया त्रयोविंश-गुणिता वर्तते।

**सीरम-संस्थानम्**

सीरम-इन्स्टिट्यूट ऑफ इण्डिया नामाख्येन संस्थानेन कोरोणा-सूच्यौषधस्य आपात्कालिकं अनुमति-प्राप्त्यर्थं आवेदनं कृतमस्ति। अनुमोदनाय आवेदितं कोविशील्ड-इत्याख्यं सूच्यौषधं उक्त-संस्थानेन देशे एव निर्मितम् अस्ति। संस्थानस्य मुख्य-कार्य-कार्यधिकारी अदार: पूनावाला प्रावोचत् यत् सूच्यौषधमिदं महत्संख्यायां जनजीवनं रक्षिष्यति।

**जम्मू-कश्मीर-जनपद-परिषद्**

अद्य जम्मू-कश्मीरे ह्यः समनुष्ठितम् जनपद-विकास-परिषद: चतुर्थ-चरणात्मकं मतदानं शान्तिपूर्णं सम्पन्नम्। अत्र चरणे चतु:त्रिंशत्-जनपद-विकास निर्वाचनक्षेत्रेषु मतदानानि विहितानि।

**क्रिकेट**

भारतम्-ऑस्ट्रलिया देशं च अन्तरा प्रचाल्यमानाया: विंशतिप्रतिविंशति क्रीकेटक्रीडाया: अन्तिमा क्रीडा अद्य सीडनी-स्थानके भविता। ध्येयमस्ति यत्-पूर्वं क्रीडितं श्रृंखलाया: प्रतिस्पर्धाद्वयं भारतीयक्रिकेट-कृन्देनैव जितमस्ति। अपराह्णे चत्वारिंशत्-उत्तर-एकवादनतः अस्याः स्पर्धायाः प्रसारणं आकाशवाण्याः श्रोतुं शक्यते।

**।। इति वार्ता: ।।**